श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीशङ्कराचार्य विरचितं

# ॥ श्रीबालमुकुन्दाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

---

*This was typeset using LaTeX and the **skt** font.

श्रीः

# ॥ श्रीबालमुकुन्दाष्टकम् ॥

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि॥ १ ॥

संहृत्य लोकान् वटपत्रमध्ये शयानमाद्यन्तविहीनरूपम्।
सर्वेश्वरं सर्वहितावतारं बालं मुकुन्दं मनसा स्मरामि॥ २ ॥

इन्दीवरश्यामलकोमलाङ्गं इन्द्रादिदेवार्चितपादपद्मम्।
सन्तानकल्पद्रुममाश्रितानां बालं मुकुन्दं मनसा स्मरामि॥ ३ ॥

लंबालकं लंबितहारयष्टिं शृङ्गारलीलाङ्कितदन्तपङ्क्तिम्।
बिंबाधरं चारुविशालनेत्रं बालं मुकुन्दं मनसा स्मरामि॥ ४ ॥

शिक्ये निधायाद्य पयोदधीनि बहिर्गतायां व्रजनायिकायाम्।
भुक्त्वा यथेष्टं कपटेन सुप्तं बालं मुकुन्दं मनसा स्मरामि॥ ५ ॥

कलिन्दजान्तस्थितकालियस्य फणाग्ररङ्गे नटनप्रियन्तम्।
तत्पुच्छहस्तं शरदिन्दुवक्त्रं बालं मुकुन्दं मनसा स्मरामि॥ ६ ॥

उलूखले बद्धमुदारशौर्यं उत्तुङ्गयुग्मार्जुनभङ्गलीलम्।
उत्फुल्लपद्मायतचारुनेत्रं बालं मुकुन्दं मनसा स्मरामि॥ ७ ॥

आलोक्य मातुर्मुखमादरेण स्तन्यं पिबन्तं सरसीरुहाक्षम्।
सच्चिन्मयं देवमनन्तरूपं बालं मुकुन्दं मनसा स्मरामि॥ ८ ॥

॥ इति श्रीबालमुकुन्दाष्टकम् समाप्तम् ॥